ॐ श्रीगणेशाय नमः ॐ तत्सत् ॥ त्वद्भक्तिरेव केवलं दुर्लभा कामास्तु तुच्छा न वरणयोग्या इत्याशयेनाभक्तानां संसारमुष्टिभिः प्रपंचयन्स्तौति विमोहित इति

विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ॥ सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वंचितः ॥ १ ॥

हे ईश योषित्पुरुषश्चेति द्विविधोऽप्ययं जनस्त्वदीयया मायया विमोहितोऽतोऽनर्थदृक् अनर्थे संसारे दृक् दृष्टिर्यस्यासौ ॥ यद्वा अर्थं परमार्थस्वरूपं त्वां न पश्यतीति तथा अतस्त्वां न भजति किंतु परस्परं वंचितः सन्सुखेच्छया दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जत इति ४६ ॥ ............... किंच

काम सुखं सूकरादिष्वपि संभवति ॥ भगवद्भजनं तु न मानुषजन्मव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभजन्नतिमूढ इत्याह — लब्ध्वेति —

लब्ध्वा जनो दुर्लभमत्र मानुषं क

थं चिदव्यङ्गमयत्नतोनघ॥ पादार-
विन्दं न भजत्यसन्मतिर्गृहान्धकू-
पे पतितो यथा पशुः॥२ अत्र कर्मभूमौ,
अव्यङ्गम् विकलाङ्गम्॥ किंच, असति, विषय सु-
खे, मतिर्यस्य सः॥ गृहमेवान्धकूपस्तस्मिन्निप-
तितः यथा, पशुस्तृण लुब्धोन्धकूपे, पततीति॥ ४७॥
न केवलमस्य, जनस्येयं गतिः किंतु ममापि तथै-
वेत्याह-ममेष इति॥ ममैष कालोजित
निष्फलो गतो राज्यश्रियोन्नद्धम-
दस्य भूपतेः॥ मर्त्यात्मबुद्धेः सुतदार-
कोशभूष्वासज्जमानस्य दुरन्तचिन्त-
या॥३ मर्त्ये शरीरे आत्मबुद्धिर्यस्य, तस्य ममा-
त एव, सुतादिष्वासज्जमानस्य॥ ४८॥ उन्नद्धमदत्वं,
प्रपंचयति-कलेवर इति-कलेवरेस्मिन्,
१ मुं० स्मु घटकुड्यसंनिभे, निरूढमानोनर,

राजा

देव इत्यहम् ॥ वृतो रथेभाश्वपदा-
त्यनीकपैर्गां पर्यटंस्त्वागणयन्सु
दुर्मदः ॥ ४ ॥ घटकुज्यादिस्तदृशो दृप्यते नात्म
नि यत एवं सुदुर्मदो भवमत्तो ममैष कालो गत
इति ॥ ४२ ॥ त्वामगणयन्तं त्वमाक्रमसीत्याह-प्रमत्तमिति
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृ
द्धलोभं विषयेषु लालसम् ॥ त्वमप्र
मत्तः सहसाभिपद्यसे क्षुल्लेलिहा
नोऽहिरिवाखुमन्तकः ॥ ५ ॥ प्रमत्तमनव-
हितम् त्वामन्तकमविगणय्य देहादिष्वासक्त
मिति यावत् ॥ कुतः प्रमत्तम् ॥ इति कृत्यचिन्तया
एवमेवं करणीयमिति मनोरथपरम्परया मनो
रथे भग्नेऽपि विषयेषु लालसमुत्सुकम् प्राप्तेऽपि
पुनः प्रवृद्धो लोभस्तृष्णा यस्य तमन्तकस्त्व-
मभिपद्यसेऽभिभवसीत्यर्थः ॥ क्षुधा सृक्किणी ले

लिहानो हिराखुं मूषकमिवेति ॥ ५० ॥ किंच कालात्म
ना त्वयाभिपन्नो देह एवं भवतीत्याह – पुरेति –
पुरा रथैर्हेमपरिष्कृतैश्चरन्मतङ्गजैर्वा
नरदेवसंज्ञितः ॥ स एव कालेन दुरत्यये
न ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥ ६ ॥
श्वसृगालादिभिर्भक्षितो विट्संज्ञितस्तैरभक्षितः
कृमिसंज्ञितो दग्धो भस्मसंज्ञितो भवति, इति बुद्ध्या
विचार्यैवंभूतशरीरे ममतां कुर्वन्तो जना हरिं नाराध-
यन्ति ते आत्मनि घातुभूता ज्ञेयाः सततम् यतः
'योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वापि च
मानुषत्वम् ॥ सुखावहं ये न भजन्ति विष्णुं ते वै म
नुष्यात्मनि घातुभूताः' इति ॥ ५१ किंच अन्तकप्रा
प्तेः प्रागपि दिग्विजयिनो राज्ञोपि पारतन्त्र्यदुःखं
तदवस्थमेवेत्याह – निर्जित्येति ॥ निर्जित्य
दिक्चक्रमभूतविग्रहो वरासनस्थः
समराजवन्दितः ॥ गृहेषु मैथुन्यसुखे-
षु योषितां क्रीडामृगः पूरुष ईशनी-

२ मु॰ स्तु-

यते ॥ ७ ॥ अभूतविग्रहो विद्यमानसंग्रामः पूर्वं ये
समाना राजानस्तै राजभिर्वन्दितोऽपि मिथुनीभावः
सुरतमेव परं सुखं येषु तेषु योषितां गृहेषु क्रीडामृ
ग इव इतस्ततो नीयते ॥ ८२ ॥ किंच तत्रातितृष्णा
कुलस्य न भोगक्षणः कश्चिदस्तीत्याह — करोतीति
करोति कर्माणि तपः सुनिष्ठितो नि
वृत्तभोगस्तदपेक्षयाददत् । पुनश्च
भूयेयमहं स्वराडिति प्रवृद्धतर्षो न
सुखाय कल्पते ॥ ८ ॥ तपस्यधःशयनब्रह्म
चर्यादौ सुनिष्ठितः पुनश्च स्वराडिन्द्रः स्यामिति
यद्वा जन्मान्तरेष्वेवमेव चक्रवर्ती स्यामिति ॥ ८३ ॥
तदेवमष्टभिः श्लोकैरीषाबहिर्मुखानां संसारं प्रपंच्य
भक्त्या तन्निवृत्तिक्रममाह — भवापवर्ग इति —
भवापवर्गो भ्रमतो यदा भवेज्जन-
स्य तर्ह्यच्युत सत्समागमः सत्सङ्-
मो यर्हि तदैव सद्गतौ परावरेशे

त्वयि जायते मतिः ॥ ९ ॥ भो अच्युत भ्रम
तः संसरतो जनस्य यदा त्वदनुग्रहेण भवस्य
बन्धस्यापवर्गोऽन्तो भवेत्प्राप्तकालः स्यात्तदा
सतां सङ्गमो भवेत् ॥ यदा च सत्सङ्गमो भवेत्तदा
सर्वसङ्गनिवृत्त्या कार्यकारणनियन्तरि त्वयि
भक्तिर्भवति ॥ ततो मुच्यते इत्यर्थः ॥ ५४ ॥ मम तु
सत्सङ्गमात्पूर्वमेव यो राज्यादिसङ्गविच्छेदो
जातः सोऽयं त्वया महाननुग्रहः कृत इत्याह—
मन्यइति मन्ये ममानुग्रह ईश ते कृतो
राज्यानुबन्धापगमो यदृच्छया यः
प्रार्थ्यते साधुभिरेकचर्यया वनं वि
विक्षद्भिरखण्डभूमिपैः ॥ १० ॥ ते त्वया
साधुभिर्विवेकिभिस्तपसे वनं प्रवेष्टुमिच्छु-
द्भिः स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति ॥ ५५ ॥
मु. तदेवं विषयसेवामार्गं भगवत्सेवामार्गं च विवि
३ स्तु. च्य वरान् वृणीष्वेति यदुक्तं तत्रोत्तरमाह—न-

कामय इति॥ न कामयेऽन्यं तव पादसे-
वनादकिंचनप्रार्थ्यतमाद्वरं वि-
भो। आराध्य कस्त्वां ह्यपवर्गदं ह-
रे वृणीत आर्यो वरमात्मबन्धनम्॥ ११॥
अकिंचना निवृत्ताभिमानाः आर्यो विवेकी॥ ५६॥
तस्माद्विसृज्याशिष ईश सर्वतो
रजस्तमःसत्त्वगुणानुबन्धनाः।
निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञ-
प्तिमात्रं पुरुषं व्रजाम्यहम्॥ १२॥
रजस्तमःसत्त्वगुणैरनुबध्यन्त इति। तथा ता
आशिष ऐश्वर्यादि शत्रुमारणादि धर्मादिरू-
पा विसृज्य परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघ-
नम्॥ कुतः निरञ्जनम्। तत्कुतः निर्गुणम्। तदपि
कुतः अद्वयम्॥ अत एव अक्षरं त्वां शरणं व्रजामी-
ति॥ ५७॥ मुंक्ष्व तावद्भोगान्कैवल्यं तु करस्थ-

मेवेतिपुनर्वरैः प्रलोभयन्तं श्रीकृष्णं पादोपग्र-
हणेन प्रार्थयते = चिरमिति = चिरमिह वृजि-
नार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोऽलब्धशान्तिः कथंचित् । शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि मापन्नमीश ॥ १३ ॥
वृजिनैः कर्मफलैरार्तः पुनस्तद्वासनाभिस्तप्य-
मानस्तथाप्यवितृषषडमित्रः तृडेव तृषा तृष्णा
न विगत तृषाः षडमित्राः शत्रव इन्द्रियलक्षणा
यस्य सः अत एवालब्धशान्तिः कथंचिद्दैववशे-
न लब्धशान्तिरिति वा शरणं स्वज्ञानं ददातीति तथा हे शरणद समुपेतः प्राप्तोऽहम् अशोक
त्वे हेतुः अभयम् तत्रापि हेतुः ऋतं सत्यम् आ-
पन्नमापदा ग्रस्तं पाहीति ॥ ५८ ॥ ॐ इति श्रीमुचुकु-
न्दस्तुतिः संपूर्णम् । शुभं भवतु सर्वजगताम् ॐ ॥
४ मु॰ स्तु॰ ॥ तत्सत् ॐ ॥

रुक्मिण्युवाच ॥ श्रुत्वा गुणान्भुव-
न सुन्दर शृण्वतां ते ॥ निर्विश्य कर्ण-
विवरैर्हरतोऽङ्गतापम् ॥ रूपं दृशां दृ-
शिमतामखिलार्थलाभं त्वय्यच्यु-
ताविशति चित्तमपत्रपं मे ॥ १ ॥ कात्वा
मुकुन्द महती कुलशीलरूप विद्या
वयोद्रविणधामभिरात्मतुल्यम् ॥
धीरा पतिं कुलवती न वृणीत क-
न्या काले नृसिंह नरलोकमनोभि-
रामम् ॥ २ ॥ तन्मे भवान्खलु वृतः प

तिरङ्ग जायामात्मार्पितश्च भवतो
ऽत्र विभो विधेहि मा वीरभागमभिमर्शतु
चैद्य आराद्गोमायुवन्मृगपतेर्बलिमम्बुजा
क्ष २ पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्च-
नादिभिरलं भगवान्परेशः आराधितो य
दि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघो-
षसुतादयोन्ये ॥४॥ श्वोभाविनि त्वमजितो
द्वहने विदर्भान् गुप्तः समेत्य पृतनापति
भिः परीतः॥ निर्मथ्य चैद्यमगधेन्द्रबलं
रु० प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशु
सु० ल्काम् ॥५॥ अन्तःपुरान्तरचरीमनिहत्य

बन्धूंस्त्वामुद्वहे कथमिति प्रवदाम्युपा
यम । पूर्वेद्युरस्ति महती कुलदेवियात्रा ।
पुराद्बहिः अम्बिकां
यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ ६ ॥
स्नानं सज्जनाः
यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ॥
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं ।
त्यजेयं प्राणान् उपवासादिभिः
जह्यामसून्व्रतकृशान् शतजन्मभिः
स्यात् ७ श्रीभागवते ५२ अध्यायः ॥

ॐ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शंख
गदाद्युदायुधम् श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं
पीताम्बरं सान्द्रपयोदसौभगम् महार्हवैदूर्यकिरीट
कुंडल त्विषापरिष्वक्तसहस्रकुन्तलं उद्दामकां
च्यांगदकंकणादिभि विरोचमानं वसुदेव ऐक्षत ॥